निविष्टाः साधवः साध्व्यो जिनं नत्वा तदन्तरे । प्रमोदमेदुरास्तस्थुरूर्ध्वा वैमानिकाः स्त्रियः ॥ २३६ युग्मम् ॥
प्रविश्य याम्यद्वारेण नैर्ऋते विधिना क्रमात् । ज्योतिष्कभुवनाधीशव्यन्तराणां स्त्रियः स्थिताः ॥ २३७
आगत्य पश्चिमद्वारा वायव्यां भुवनेश्वराः । ज्योतिष्का व्यन्तराश्चैवमादधुर्विधिना स्थितिम् ॥ २३८
प्रविश्याथोत्तरद्वारा प्रणम्यानुत्तरं जिनम् । वैमानिकनरा नार्य ईशान्यां क्रमतः स्थिताः ॥ २३९
न भीस्तत्र न मात्सर्यं न बाधा न च दुष्कथा । नासीन्नियन्त्रणा नाहंकृतिः स्वामिप्रभावतः ॥ २४०
तत्र द्वितीयवप्रान्तः कण्ठीरवगजादयः । वैरिणो ऽपि मिथः प्रेमलालसाः स्थितिमादधुः ॥ २४१
तस्थुस्तृतीयवप्रान्तर्वाहनानि क्षमाभृताम् । सुराणामसुराणां च विमानानि यथाक्रमम् ॥ २४२
क्षेत्रे योजनमात्रे ऽत्र प्राणिनः कोटिकोटिशः । संमान्ति यदनाबाधं प्रभावः प्राभवो हि सः ॥ २४३
धर्मनाथं जगन्नाथमथानम्य जिनेश्वरम् । स्तुतिं कर्तुं समारेभे पाकशासः सुधाशनः ॥ २४४
अद्यमद्य सद्यो ऽपि क्षीणं मे क्षीणकल्मष । त्वदाननविलोकेन वायुनेव घनाघनः ॥ २४५
देव त्वदङ्घ्रिकल्पद्रुसेवाहेवाकिनो ऽत्र ये । भजन्ते ते न दारिद्र्यमुद्रामुद्रितमाश्रयम् ॥ २४६
नीरागं तव यच्चित्तं तन्मिथ्या नाथ कथ्यते । मुक्तिनारीपरीरम्भलोलुभं कथमन्यथा ॥ २४७
गुणैस्तवातिनीरन्ध्रैर्धर्मनाथ मनो मम । तथा बद्धं यथा गन्तुं नोत्सहत्यन्यदैवते ॥ २४८
श्रीधर्मनाथभगवन् भविता स क्षणः कदा । भवितास्वो यदा त्वं चाहं चैकत्राव्यये पदे ॥ २४९
तनोति न तथोत्कण्ठां मानसं मे शिवश्रिये । यथा तव पदाम्भोजपरिवस्याविधौ विभो ॥ २५०
त्वमनल्पमतिः स्वामिन् शुचमल्पमतिस्त्वहम् । अतो नहि मया कर्तुं शक्यस्तव गुणस्तवः ॥ २५१
जिह्वामेकां श्रुती नेत्रे द्वे द्वे नाथ विधिर्व्यधात् । क्षमः कीर्तिं गुणान् रूपं वक्तुं श्रोतुं किमीक्षितुम् ॥२५२
एतमेवार्थये ऽत्यर्थमर्थमर्थीव तीर्थप । वीतराग परं वीतरागं मम मनः कुरु ॥ २५३
अमुमभुमतीक्ष्यं तं स्तुत्वा तत्त्वावलोकदृक् । निषसाद यथास्थानं पाकशासः प्रमोदितः ॥ २५४
अथो सुधारससुधं सभाचारप्रचारिकाम् । विधातुं देशनां धर्मचक्रवर्ती प्रचक्रमे ॥ २५५
असार एव संसारः सर्वदा दुःखमन्दिरम् । धर्म एव प्रशस्यः स्यात् तत्र स्वर्गापवर्गदः ॥ २५६
संसारसागरे ऽपारे भ्रमद्भिः प्राणिभिश्चिरात् । नृजन्म लभ्यते पुण्यैर्वैसुधान्तर्निधानवत् ॥ २५७
नृभवं दुर्लभं प्राप्य यः प्राणी तनुते वृषु । न हितं प्रान्तकाले हि शोचत्यात्मानमेव सः ॥ २५८
करालज्वलनज्वालावलीढे मन्दिरे यथा । स्थातुं न युज्यते पुंसस्तथा दुःखाकुले भवे ॥ २५९
मानुष्यं दुर्लभं प्राप्य चिन्तारत्नसहोदरम् । विवेकिभिर्विधातव्यः प्रमादो न कदाचन ॥ २६०
गृह्णाति काकिणीं को ऽपि मूढः कोटिं यथोज्झति । तथा पुमान् विषयजं शर्म धर्मं जिनोदितम् ॥ २६१
सागरान्तरकल्लोलमालालोलाः श्रियो नृणाम् । कुशाग्रस्थस्तुषारबिन्दुकम्प्रं हि जीवितम् ॥ २६२
रूपलक्ष्मीस्तडिद्दण्डसादृश्यं भजते ऽनिशम् । स्वाम्यं स्वप्नोपमं संध्यामेघलेखासमं सुखम् ॥ २६३
देशनाविरते श्रीमद्धर्मनाथजिनेश्वरे । कृताञ्जलिस्ततो वाचमुवाच गणभृत्तमः ॥ २६४

'भगवन्, एतस्यां सुरासुरनरतिर्यक्कोटिनिभृतायां पर्षदि कः प्रथमं महोदयपदं गामी' इति । ततो भगवता निवेदितम् । 'भो देवानुप्रिय, यस्तव समीपे मूषकलोचनः स्मृतपूर्वभवः संविग्नमानसो निर्भयप्रचारो मद्दर्शनसंतुष्टः प्रमोदभरप्रविगलदश्रुलोचनयुगलस्ताण्डवितकर्णयामलः समागच्छन्नस्ति सर्वेषामपीहस्थजन्तूनां पूर्वमेवैष पापविनिर्मुक्तः सिद्धिपदं गमिष्यति' इति । एवं भगवतो भणितानन्तरमेव समकालं सकलनरेन्द्रवृन्दत्रिदशेन्द्रलोचनानि कौतुकरसविकासवन्ति मूषकोपरि निपतितानि । स चागत्य भक्तिभरनिर्भराङ्गो भगवतः श्रीधर्मनाथस्य पादपीठे लुलोठ । महीतलन्यस्तोत्तमाङ्गः सर्वाङ्गरोमोद्गमसंगम आखुः स्वभाषया भणितुं प्रवृत्तः । ततो भणितं त्रिदशपतिना । 'भगवन्, मम मनसि महत्कौतुकमिदं यदेष मूषकः सर्वाधमस्तुच्छजातिः काननान्तरसंचारी सर्वेषामेवास्माकं मध्ये प्रथमं निर्वृतिश्रियमाश्रयिष्यति ।' ततः श्रीमद्भगवान् स्वयमवादीत् ।

§ १८) अस्ति विन्ध्यो नाम महीधरः । तस्योपत्यकायां विन्ध्यावासाभिधानो महान् संनिवेशः, स चातीव विषमः । तत्र महेन्द्रः पृथिवीपतिः । तस्य ताराभिधाना महादेवी । तत्कुक्षिसंभवः सुतस्ताराचन्द्रो ऽष्टवर्षदेशीयः । अत्रावसरे छिद्रान्वेषिणा बद्धवैरातिशयेन कोशलेन भूमिपतिनावस्कन्दं

8) r न्ह वैमानानि　20) r मतीक्षं तं　31) r B om. पर्षदि　37) B om. ततो　39) r B निवृति°.　41) Before महादेवी r adds लोचना and B adds सुलोचना (सु being added later).

दृत्वा सकलो ऽपि संनिवेशो ऽभाजि । महेन्द्रो युध्यमानस्तेन वैरिणा विनाशितः । ततो हतं सैन्यमनायकमिति सकलमपि बलं पलायितुं प्रवृत्तम् । तत्र तारामहादेवी तं पुत्रं ताराचन्द्रमङ्गुल्यां विलग्य जनेन सह नष्टा । सापि नश्यन्ती क्रमेण शिवमिव दुर्गान्वितं, कामिनीकुचतटमिव विहारालंकृतं, सरोवरमिव कमलालयं, गान्धिकापणमिव सचन्द्रं, स्वर्गमण्डलमिव [ विबुधालङ्कृतम् ], वाटिकास्थानमिव प्रपास्पदं सदारम्भं सशिवं च लाटदेशलक्ष्मीललाटललामश्रीभृगुकच्छमियाय ।

आस्यान्यास्योपमामेव लभन्ते यत्र सुभ्रुवाम् । राकाशशाङ्कपद्मानि तेषां दास्यं तु बिभ्रति ॥ २६५
प्राकारो ऽभ्रंलिहो यत्र संक्रान्तः परिखाम्बुनि । पातालनगरीशालमलं जेतुमना इव ॥ २६६
रत्नान्यादद्रिरे ऽनेन मन्थेहादिति मत्सरात् । अम्बुधिः परिखाव्याजाद् यत्र शालमवेष्टत ॥ २६७
नगेति लक्षणे लोकैर्यत्र पेठे ऽक्षरद्वयम् । याचके तु समायाते स्वभ्यस्तमपि विस्मृतम् ॥ २६८

§ १९ ) तत्र च सा किंकर्तव्यमूढचित्ता 'कथं वा भवितव्यम्' इति चिन्तयन्ती यूथभ्रष्टा हरिणीव चम्परमहेश्वरमण्डपं प्रविवेश । तदैव तया गोचरचर्यां निर्गतं साध्वीयुगलमदर्शि । तद्दृष्ट्वा 'महानुभावे प्रधाने क्रियाकलापनिरते एते साध्व्यौ' इति चिन्तयन्त्या तया समुत्थाय वन्दिते । ताभ्यां धर्मलाभं दत्त्वा 'कुतस्त्वम्' इति पृष्टा । तया 'विन्ध्यपुरादागता' इति विज्ञप्तम् । ततस्तस्या रूपलावण्यलक्षणानि निरीक्ष्य तच्च तादृशगद्गदस्वरभाषितं च श्रुत्वा साध्व्योरनुकम्पा महती जाता । यतः,

"महतामापदं वीक्ष्य मोदन्ते नीचचेतसः । महाशया विषीदन्ति परं प्रत्युत सर्वदा ॥ २६९ ॥"

ताभ्यां भणितम् । 'यदि भद्रे, तव पुराभ्यन्तरे को ऽप्युपलक्षितो नास्ति तत आवाभ्यां सह समागच्छ ।' ततो 'महाननुग्रहः' इति तया वदन्त्या ताभ्यां सहागत्य महत्या भक्त्या प्रवर्तिनी प्रणता । तां दृष्ट्वा चिन्तितं प्रवर्तिन्या । 'अहो, एतस्या अतिकमनीयाकृतिः पुनरीदृश्यवस्था, तन्मन्ये कापीयं राजवंश्या राजकलत्रं वा, असावत्यन्तसुन्दरः सल्लक्षणशाली पार्श्वे सुतश्च ।' ततः प्रवर्तिनी तां तारां सुतसहितां सवात्सल्यमूचे । 'वत्से, समागच्छ मया सहेत्यादि ।' तया प्रवर्तिन्या सा शय्यातरगृहे स्थापिता । शय्यातरेण च सा दुहितेव प्रतिपन्ना । स राजसूनुर्नित्यं विविधाशनपानादिभिरुपचर्यते । अन्यदा कियद्भिर्दिनैर्गतैस्तारा विगतश्रमा सुखोपविष्टा प्रवर्तिन्या भणिता । 'वत्से, सांप्रतं त्वया किं कर्तव्यम्' इति । तारया जल्पितम् । 'भगवति, यो मम प्रियतमः स समराङ्गणे विपन्नः । विन्ध्यावासपुरं कोशलराजेन भग्नम् । समग्रो ऽपि परिजनः सर्वासु दिक्षु काकनाशं ननाश । सांप्रतं कोशलनरेश्वरो मम पत्युर्वैरी प्रबलबलकलितो मम पुत्रस्तु बलरहितः, अतो मम नास्ति कापि स्वराज्यलक्ष्मीप्रत्याशा । अहमत्र पुनः प्राप्तकालं तत्करिष्ये येन भूयो ऽपि न ममेदृक्षा आपदः संपद्यन्ते । यद्भगवती मम समादेशं दास्यति तदेवावश्यं करिष्ये ।' प्रवर्तिन्योक्तम् । 'वत्से, यद्येव तव निश्चयस्तनस्ताराचन्द्रं सुतं प्रव्रज्यार्थमस्मदाचार्याणां समीपे समर्पय । त्वं पुनरस्माकमन्तिके दीक्षां गृहाण । निगृहाण च निजं दुष्कर्म । एवं कृते सर्वस्यापि जनस्य नमस्या भाविनी । संसारवासदुःखस्यापि पर्यन्तो भविष्यति' इति तदाकर्ण्य तयापि 'तथा' इति प्रतिपन्नम् । तया तारया निर्मोहया ताराचन्द्रस्तनुजः श्रीअनन्तजिननाथतीर्थे विचरतो धर्मनन्दनाचार्यस्य प्रदायार्पितः । तेनापि यथाविधिना स प्रव्राजितः । ततः कियति काले व्यतीते यौवनमाश्रितो राजसूनुमुनिः कर्मवशतो ऽध्ययनालसो नित्यमेव कृपाणधनुर्गन्धर्वनृत्यतूर्येष्वत्तचित्तप्रवृत्तिरेव समभवत् । ततः स स्वयमेवाचार्यैः पेशलवचोभिः सिद्धान्तानुयायिभिस्तथोपाध्यायेन साधुजनेनापरैः श्रावकैश्च शिक्षितो ऽपि शैक्षो विलक्षमना बभूव न पुनस्ततः प्रत्यावृत्तः । यतः,

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा । सुशिक्षितो ऽपि कापेयं कपिस्त्यजति नो यतः ॥ २७०

§ २० ) अत्रान्तरे धर्मनन्दनसूरयो बाह्यभूमिकामुपाजग्मुः । स च ताराचन्द्रो ऽन्तेवासी गुरुमार्गानुगामी वनस्थल्यां स्वैरं मृगकान् क्रीडां कुर्वतो विलोक्य व्यचिन्तयदिति ।

'क्रीडन्ति स्वेच्छया कस्यापि हि कुर्वन्ति नो नतिम् ।
न दुर्जनवचः शृण्वन्त्यहो धन्यतमा अमी ॥ २७१ ॥'

---

2) B विलग्य 4) B has a marginal gloss on सचन्द्रं etc. like this सह चन्द्रेण कर्पूरेण वर्तते सचन्द्रम् । नागरपक्षे सह सुवर्णेन वर्तते । सुरो देवेन्द्र पुण्य प्रपञ्च । सदारम्भाऽप्सरा यत्र पक्षे सदा कदलीसहितम्, प्रधाना आरम्भा यत्र । शिव ईश्वर, शिवो वृक्षविशेष शिवं कल्याणम् ।, P B omit [विबुधालङ्कृतम्], P B वाटिकास्थानकमिव, B सत्प्रपाश्रयं B सदा प्रपाश्रयं सदारम्भं, B °ललाम श्री° 13) B विन्ध्यावासपुरा° 17) B om. तां दृष्ट्वा 19) P सुतसहितां शय्यातरगृहे स्थापिता, C om. प्रवर्तिनी etc. to तया and adds तारा सपुत्रा between सा and शय्यातरगृहे, B however adds on the margin सवात्सल्य' etc. to सा 28) P B inter निजं दुष्कर्म and निगृहाण च 30) P तया तथेति 33) C inter. सिद्धान्तानुयायिभि: & पेशलवचोभि 35) P नोपदे°.

अस्माकं पुनः परायत्तानां सदैव निबिडनिगडवर्जितो बन्धनविधिः। अपर्वतपातरूपं पतनम्। सजीवं मरणम्। एकस्तावदिति वदति 'यदिदं विधेहि'। अन्यो जल्पति 'यदिदं समाचरेः'। परः 'चरणौ क्षालय'। अन्यो 'चाराभूमिं प्रमार्जय'। इतरो 'विश्रामणां कुरु'। एको 'वन्दनकं ददस्व, प्रतिक्रमणं विरचय'। इत्यादिविविधवचनैरनारतं प्राजनैरिव प्रेर्यमाणस्य मम नास्ति निमेषमात्रमपि नारकस्येव सुखावकाशः। तदेते ऽसत्तः प्रधानाः' इति चिन्तयन् गुरुभिः सह वसतिमायातवान्। स च कियन्तमपि कालं श्रामण्यमनुपाल्य तद् दुश्चिन्तितशल्यं गुरूणां पुरतो ऽनालोच्याकालमृत्युना ज्योतिष्केषु किंचिदूनपल्यायुः सुपर्वा बभूव। तत्र भोगान् भुक्त्वा च्युत्वास्या एव नगर्याः पूर्वोत्तरदिग्विभागे स काननान्तरस्थल्यामुन्दरत्वं प्राप्य यौवनमितो ऽनेकमूषिकाभिः समं क्रीडन् कदाचिद्विवराद्बहिरुपेतः सुरभिगन्धोदककुसुमवृष्टिगन्धमाघ्राय तदनुमार्गानुसारेणात्र समवसृतो समागत्य धर्मं श्रोतुं प्रावर्तत। अथामुष्य मद्वचः शृण्वतो जातिस्मृतिरुदपद्यत। 'यदहं पूर्वभवे सशल्यं व्रतमापाल्य ज्योतिष्केषु देवत्वमवाप्य कान्तारान्तरचारी मूषकः संजातः।' एतत्स्मृत्वा 'अहो, कीदृशः कर्मपरिणामः, धिग्विलसितं संसारस्य यद्देवत्वमुपलभ्य तिर्यग्जातौ मूषकः समुत्पन्नः। अधुना तदासद्य श्रीभगवतः पादमूलमुपागत्य प्रणिपत्य च पृच्छामि किमहं मूषकभवादनन्तरं प्राप्स्यामि' इति चिन्तयन् मम समीपमुपससर्प। भक्तिभरनिर्भरस्वान्तः सुचेतसा स्तोतुमारेभे।

'तवाज्ञालोपिनो ये ऽत्र लोकत्रयशिरोमणे। जायन्ते जन्तवो दूरं दुर्गतौ ते भ्रमन्ति हि॥' २७२

§२१) ततो जानता गणभृता लोकबोधार्थं प्रभुः पृष्टः। 'भगवन्, किमनेन निर्ममे, यदनुभावेनेदृश एव जातो ऽस्ति' इति। प्रभुः प्राह। 'प्राग्भवे ऽनेन व्रतिना सता गच्छशासननियन्त्रणानिर्विण्णचेतसा बहिर्भूमिं गतेन स्वैरविहारिणो मूषकान् दृष्ट्वेति चिन्तितं यथा 'अरण्यमूषका धन्यतमाः'। इति दुश्चिन्तनशल्ययुतव्रतपालनानुभावेन देवत्वमूषकत्वयोग्यमायुर्निबद्धम्।' अथ भूयो ऽपि पृष्टं भगवतः पार्श्वे गणधरेण। 'नाथ, किं सम्यग्दृष्टिजीवो ऽपि तिर्यगायुर्बध्नाति न वा' इति। स्वामिनोक्तम्। 'सम्यग्दृष्टिजीवस्तिर्यगायुरनुभवति, न पुनर्बध्नाति। यतः,

भवद्धमानिको ऽवश्यं जन्तुः सम्यक्त्ववासितः। यदि नोद्वान्तसम्यक्त्वो बद्धायुर्न पुराथवा॥ २७३

तावदेतेन देवत्वे सम्यक्त्वं वान्त्वायुस्तिर्यक्त्वे नियद्धम्' इति। ततस्त्रिदशेशेन जल्पितम्। 'भगवन्, अयं संप्रति शीघ्रं कथं सिद्धिगामी' इति। निवेदितं च भगवता। 'इतश्चैष स्ववनस्थल्यां व्रजन् चिन्तयिष्यति। 'अहो दुरन्तः संसारः, कुशाग्रबिन्दुवच्चञ्चलं जीवितव्यं, चपला विषयतार्क्ष्याः, न वरेण्यं निदानविशल्यम्, अधमा मूषकजातिः, दुष्प्रापः श्रीजिनप्रणीतः पन्थाः, ततो वरमत्र नमस्कारपरायणो म्रियेय, यथा विरतिप्रधानं जन्म लभेयम्'। इति चिन्तयन् तस्मिन्नेव स्थाने भक्तं प्रत्याख्यायैतदेव मद्वचो ऽतीव दुष्टं भवस्वरूपं च निरूपयन्नमस्कारपरो भावी। तत्रैतस्य तिष्ठतो मूषिकास्तन्दुलकोद्रवादिकं तत्पुरो मोक्ष्यन्ति। ततस्तान्निरीक्ष्य मूषकश्चिन्तयिष्यति।

'मेरोरधिकमाहारं पयोधेरधिकं पयः। अनारतं भवं भ्राम्यन्नेव जन्तुरुपाददे॥ २७४
तच्चेन चेन्न तृप्तो ऽयं भक्षितैस्त्वाद्विभिः कणैः। का नाम प्राप्स्यते तृप्तिः स्यास्यती'ति विचिन्तयन्॥ २७५

§२२) ततस्तदभिमुखमीषदपि मूषको न विलोकयिष्यते, तच्च तादृशं वीक्ष्य ता मूषिकाश्चिन्तयिष्यन्ति। 'कुतो हेतोरयमस्मत्पतिः कुपितस्तदेनं प्रसादयामः' इति चिन्तयन्त्य एतत्समीपमुपेष्यन्ति। ततः काश्चिदुत्तमाङ्गं कण्डूयन्ति, अपरा अङ्गं परिस्पृशन्ति। एवमुपचर्यमाणस्ताभिरभित एव चिन्तयिता 'सदैव नरकनिगमा इमा वामाः संसारदुःखमूलम्।' ततस्ताभिरेतन्मनो न कथमपि समाधितः स्वर्णाद्रिशृङ्गवत्खरशब्दवातोत्कलिकाभिः क्षोभयिष्यते, तत्कृतं सर्वैथैव वृथा भावि एतस्मिन् वज्रे नखविलेखनमिव। ततस्तृतीयदिन एव क्षुधाक्षामकुक्षिर्विपद्य मिथिलानगर्यां मिथिलस्य राज्ञश्चित्रामिधाया महादेव्या उदरसरसि राजहंसलीलामलंकरिष्यति। तेन च गर्भस्थेन जनन्याः सर्वसत्त्वानामुपरि मैत्रीवासनावासितमन्तःकरणं भविता। स च भूपस्तस्य जातस्य 'मित्रकुमारः' इति नाम दास्यति। तस्य कौतूहलिनः कुमारस्य ताम्रचूडकपिपशुसम्बरहरिणमूषकादिभिर्नियन्त्रितैरेव क्रीडां कुर्वतो ऽब्दवर्षाणि यास्यन्ति।

अन्यदा मेघमालाभिः पिहितव्योममण्डलः। विप्रलम्भभृतां कालः प्रावृट्कालः समागमत्॥ २७६
सरितः प्राप्य वर्षापः पातयन्ति तटद्रुमान्। पीडयन्ति न कं नीचाः श्रियं प्राप्य महीभृताम्॥ २७७

3) B विश्रमणं कुरु  14) C B सचेतसा  15) C हे for हि  21) C om. न पुनर्बध्नाति  29) P B मूषकश्चिन्तयति
31) B तृप्तिं  32) P B °मिमुखमीषन्मूषको विलोकयिष्यते  37) B °मिधानाया

यथा यथावनीपीठे मुञ्चन्ति स्म घना घनम् । पेच्छत्तथा तथा कान्ता मन्मथव्यथिता घनम् ॥ २७८
द्योतन्ते दिवि खद्योतास्तमस्विन्यां निरन्तरम् । संजातयुवतिजातविरहाग्निकणा इव ॥ २७९
अतीवोत्कम्पते यत्र योगिनामपि मानसम् । किं पुनर्दूरसंस्थानामध्वगानां निगद्यते ॥ २८०
सर्वेषामपि पर्जन्यः समभूदतिवल्लभः । प्रोषितप्रेयसीवर्गमनर्गलशुचं विना ॥ २८१
शुक्लापाङ्गाः प्रनृत्यन्ति गर्जन्ति च घनाघनाः । अन्तरिक्षे चतुर्दिक्षु क्षणिका लक्ष्यते क्षणम् ॥ २८२
प्रपा मयि समायाते कथमद्यापि मण्डिताः । वर्षते ऽतिघनेनाम्बु सर्वास्ताश्चक्रिरे वृथा ॥ २८३

§ २३ ) ईदृशे समये स मित्रकुमारः पुरबाह्योद्देशं निर्गतस्तैः शकुनश्वापदगणैर्बन्धनबद्धैः क्रीडयिष्यति । तेन च प्रदेशेनावधिज्ञानी मुनिर्गमिष्यति । स च व्यावृत्तस्तत्कुमारक्रीडां निरीक्ष्योपयोगं दास्यति । 'अहो, अस्य कीदृशी प्रकृतिस्तत् किमत्र कारणम्' इत्युपयुक्तावधिज्ञानेन करतलकलितकुवलयस्पष्टदृष्टान्तवत् पूर्वभवे तस्य ताराचन्द्रस्य साधुत्वं ज्योतिष्कदेवत्वं मूषकत्वं राजसुतत्वं च द्रक्ष्यते । 'अयं बोधयोग्यः' इति चिन्तयन् स भणिष्यति ।

'श्रमणत्वं सुपर्वत्वमाखुत्वं स्मृतिमेति ते । स्वजनातुरः किं जीवान् कदर्थयसि भो वद' ॥ २८४

तदाकर्ण्य कुमारश्चिन्तयिष्यति । अहो, किं पुनरेतेन साधुना भणितोऽस्मि । 'साधुर्ज्योतिष्कदेवो धूपलोचन.' इति । तावत् श्रुतपूर्वमिव मे । एवमूहापोहमार्गमुपागतस्य तस्य तथाविधकर्मणः प्रशान्त्या जातिस्मृतिरुत्पत्स्यते । ततः संसारं दुःखसागरं परिज्ञाय तस्यैव मुनेः पार्श्वे प्रव्रज्य नानाविधाभिग्रहसाग्रहः समाधिना विविधं तपो विधाय क्षपकश्रेण्यामन्तकृत्केवली भविष्यति' इति । तेन भणामो यदेष सर्वेषामप्यस्माकं पूर्वं महोदयपदं गमिष्यति । अस्माकं पुनर्दशायर्पसहस्रशेषमद्याप्यायुः । एतद्रूपलोचनाख्यानकं निशम्य त्रिदशेन्द्रादीनां मनुजानां च मनसि महत्कौतुकमुत्पेदे । अथो भक्तिभरनिर्भृतचेतसा मघवता तं मूषकं स्वपाणिक्रोडमारोप्याभाणि ।

'अहो धन्यस्त्वमेवैको वन्द्यस्त्वमसि नाकिनाम् । सिद्धिगामी पुरोऽस्माकं यस्त्वमुक्तः स्वयंभुवा ॥ २८५
सुराः पश्यत कीदृक्षः स्वभावः श्रीजिनाध्वनः । लभन्ते निर्वृतिं येन तिर्यञ्चो ऽपि भवान्तरे ॥' २८६

एवं वासव इवान्यैरपि त्रिदशेश्वरैर्दनुजनाथैर्नृपशतैः करात्करतलं संचार्यमाणः क्षितिपतिकुमारचन्द्रालिङ्ग्यमानः स्नेहपरवशया इला 'अयमस्मानप्यधिको यो ऽनन्तरजन्मनि निःश्रेयसभाजनं न वृथा श्रीजिनप्रणीतं वचः' इति स श्लाघितः ।

§ २४ ) ततो विरचिताञ्जलिना पद्मप्रभदेवेन पृष्टम् । 'भगवन्, वयं भव्याः किमभव्याः' इति । भगवानभ्यधात् । 'भवन्तो भव्या सुलभबोधयः ।' पद्मप्रभेण विज्ञप्तं पुनः । 'वयं पञ्चापि जनाः कतिपयभवसिद्धिगाः ।' निगदितं श्रीमता धर्मतीर्थकृता । 'इतश्चतुर्थे जन्मनि यूयं पञ्चापि सर्वदुःखक्षयगामिनो भविष्यथ ।' पद्मप्रभः समुवाच । 'स्वामिन्, इतो मृतानामस्माकं कुत्रोत्पत्तिर्भाविनी ।' स्वामिना जगदे । 'इतश्च्युत्वा त्वं वणिक्पुत्रः, पद्मवरस्तु राजसुता, पद्मसारस्तु नृपतितनयः पद्मचन्द्रः, पुनर्विन्ध्यगिरौ मृगरायुध', पद्मकेसरः पुना राजपुत्रः ।' इति निवेद्य स्वयं भगवान् श्रीधर्मनाथस्तस्थौ । देवा अपि समवसरणं संहृत्य स्वर्गमार्गमगमन् । भगवानपि पीयूषरोचिरिव भव्यजनकुमुदप्रमोदसंपादनाय विहर्तुं प्रवृत्तः । ततस्ते पञ्चापि संलापं कर्तुं प्रावर्तन्त । एकैकैकस्य संमुखं भणितम् । 'यत् स्वयं भगवता गदितं तदाकर्णितम्, ततो ऽस्माभिः किं करणीयं सम्यक्त्वलाभार्थम् ।' परेण मन्त्रयित्वा प्रोचे । 'यदिदं विषमं कार्यमुपस्थितम् । एको वणिग्जन्मा । अन्यो राजतनुजा । अपरः पारीन्द्रः । अपरौ राजपुत्राविति । ततो न ज्ञायते कथं पुनरस्माकं बोधिलाभः । क्व पुनः संगमो भावी । तदहो पद्मकेसर, इति भगवतादिष्टं यत्तव पश्चाच्च्युतिर्भाविनी । त्वया स्वावधिना ज्ञात्वास्माकं यत्र तत्रोत्पन्नानां सम्यक्त्वं दातव्यमिति । न पुनः स्वर्गसुन्दरीवक्षोजस्पर्शसुखलालसेन विस्मृतसकलपूर्वजल्पितेन भवितव्यम् ।' तेनोक्तम् । 'अहं सम्यक्त्वं दास्यामि, परं मोहोपहतचेतसां भवतां मद्वचःप्रत्ययो न भविष्यति ततः क उपायः कर्तव्यः ।' तैश्चतुर्भिरुक्तम् । 'मन्त्रं निवेदितम् । तत एतदधुनैव क्रियते, यदात्मीयात्मीयानि रत्नमयानि प्राग्भवमनुष्यरूपाणि कृत्वैकस्मिन् स्थाने निक्षिप्यन्ते, तानि कालेन दर्शनीयानि यथा परस्परं दृष्ट्वा कदा-

---

8) B om. कुमारक्रीडां etc. to प्रकृतिस्तत् 14) B °मार्गमागतस्य 15) B °विधाभिग्रह समाधिना 20) B पुरोऽस्माकं 22) B क्षितिपकुमार° 26) C °बोधय (यः), B वयतन् for पुन.. 30) B has a marginal correction °नाथ समुद्रसौ 40) P B क्रियते for निक्षिप्यन्ते

चित्पूर्वजन्मस्मरणसाभिज्ञानेन धर्मप्रतिपत्तिरस्माकं भवेत् ।' इति मणद्भिस्तैर्भुवमागत्य तानि तत्र निक्षिप्तानि यत्र वने तस्य कण्ठीरवस्योत्पत्तिः । विवरद्वारे च महती शिला प्रदत्तेति । ततस्ते सर्वे ऽपि स्वविमानलक्ष्मीमलंचक्रुः । तत्र ते दिव्यसुखमनुभवन्तस्तिष्ठन्ति ।

§ २५ ) ततः कुमारकुवलयचन्द्र, तेषु पद्मप्रभदेवो विगलच्छरीरकान्तिः परिम्लानवदनः सुदीनमनाः पवनाहतप्रदीप इव झटिति विध्यातः । ततो जम्बूद्वीपे द्वीपे भरतक्षेत्रे

प्रत्यर्थिपार्थिवप्रत्तकम्पा चम्पाभिधा पुरी । चम्पकैर्दृश्यते यत्र दैवतोद्यानसौरभम् ॥ २८७
धनदत्ताभिधस्तत्र पवित्रमतिशेखरः । श्रेष्ठी यस्तु श्रिया श्रीदलीलामालम्बते किल ॥ २८८

तस्य श्रीपतेरिव लक्ष्मीर्लक्ष्मीर्नाम्ना प्रियतमा । स पद्मप्रभजीवस्तत्कुक्षिसंभवः सागरदत्ताभिधसूनुर्जातः । पञ्चभिर्धात्रीभिः प्रतिपाल्यमानः स कान्त्या गुणैः कलाकलापेन च प्रवर्धमानः क्रमतो यौवनश्रियमाश्रितः । पित्रा समानसमाचारशीलस्य कस्यचिद्वाणिजस्य कन्यकां स श्रीसंज्ञां परिणायितः ।

सुखं वैषयिकं साकं श्रेष्ठिसूनोस्तयानिशम् । तस्यानुभवतः स्वैरं शारलक्ष्मीरवातरत् ॥ २८९
फलप्राग्भारमासाद्य सद्यः कलमशालयः । भजन्त्येव नतिं यत्र नयवन्त इव श्रियम् ॥ २९०
भेजुर्जलानि नैर्मल्यं हृदयानि सतामिव । अयुगच्छदसौगन्ध्यवासिता हरितो ऽभवन् ॥ २९१
यत्र तीव्रकरस्तीव्रैः करैश्च समतापयत् । कुभूपतिरिव स्वैरमखिलं भूमिमण्डलम् ॥ २९२
अभूज्जनः सुपाहीव यत्र सन्मार्गजाड्गिकः । सरोवतंसाः क्रीडन्ति राजहंसाश्च सश्रियः ॥ २९३

एवंविधायां शरदि स सागरदत्तः स्निग्धमुग्धयन्धुजनान्वितः पुरीबाह्योद्देशमुपागतः । कौमुदीमहोत्सवं दृष्ट्वा कस्मिंश्चिच्चत्वरे नटपेटकान्तः केनापि पठ्यमानं कस्यापि कवेः काव्यमशृणोत् ।

'यो धीमान् कुलजः क्षमी विनयवान् वीरः कृतज्ञः कृती
रूपैश्वर्ययुतो दयालुरशठो दाता शुचिः सत्रपः ।
सद्भोगी दृढसौहृदो ऽतिसरलः सत्यव्रतो नीतिमान्
बन्धूनां निलयो नृजन्म सफलं तस्येह चामुत्र च ॥' २९४

§ २६ ) ततस्तेन सुभाषितरसपूरितचेतसा भणितम् । 'भो भो भरतपुत्राः इदं लिखत यत्सागरदत्तेनामुष्य सुभाषितस्य लक्षं देयम् ।' ततः कैश्चित्सागरैकपक्षोक्तिः । 'यदयं सागरदत्तो महारसिको विदग्धो दाता प्रस्तावविद्वरो सत्त्वश्च' इति । अपरैश्च जल्पितम् । 'अमुष्य किं स्तूयते यः पूर्वोपार्जितं वित्तजातमर्थिभ्यो ददाति स कथं प्रशस्यः । यः पुनर्निजभुजसमार्जितमर्थं व्ययति स एव प्रशंसाभाजनम् ।' अहो, 'एतैर्ममोपहासः कृतः' इति चिन्तयतस्तस्य तद्वचश्चेतसि शल्यमिव लग्नम् । ततो ऽपत्रपापरो दीक्षापन्न इव गृहमागत्य स शय्यायां निविष्टः । यतः,

विज्ञानामप्यविज्ञानां मुदे मिथ्यापि हि स्तुतिः । निन्दा सत्यापि विज्ञानामपि दुःखाय जायते ॥ २९५

ततः श्रिया चेष्टिताकारपरिज्ञानकुशलया चिन्तितम् । 'अद्य कथं मम पतिरुद्विग्न इव लक्ष्यते । यतः,

जानन्ति जल्पितादपि निःश्वसितादपि विलोकितादपि च ।
ते परमनांसि येषां मनस्सु वैदग्ध्यमधिवसति ॥ २९६

ततस्तया भणितम् । 'अद्य नाथ, कथं भवान् विलक्ष इव ।' तेन चाकारसंवरणं कुर्वताभ्यधायि । 'प्रियतमे नहि नहि, किंतु शरत्पूर्णिमायां कौमुदीमहोत्सवं प्रेक्ष्यमाणस्य मम महान् परिश्रमः समजन्यत ईदृशः, न पुनरन्यो हेतुः' इत्युक्त्वा स स्थितः । ततो रजन्यां शय्यागृहे ऽलीकं प्रसुप्तः क्षणं किमपि दध्यौ च । ततः सागरदत्तस्तां श्रियं कान्तां प्रसुप्तां परिज्ञाय मन्दं मन्दमुत्थाय वसनखण्डं परिधाय द्वितीयखण्डं च स्कन्धे क्षिप्त्वा खटिकाखण्डेन वासभुवनान्तरे स्वेनैव विरचितं श्लोकमेत भारपट्टे लिलेख ।

'वर्षान्तरे न यद्यस्मि सप्तकोटीः समर्जये । विशामि ज्वलने ऽवश्यं ज्वालामालाकुले ततः ॥' २९७

इदं लिखित्वा वासवेश्मतो निःसृत्य नगरनीरनिर्गमद्वारेण दक्षिणाशां प्रति चचाल । स च क्रमतः सर्वत्र जनपदस्वरूपं निरूपयन् दक्षिणाम्बुधितीरविराजिनीं जयश्रीनगरीमवाप । स तत्पुरीबाह्योद्देशे एकस्मिन् जीर्णोद्याने ऽशोकानोकहतले दूरमार्गश्रमव्यपगमाय निषण्णश्चिन्तयामासेति । 'किमतुच्छमत्स्यकच्छपसंकीर्णितुङ्गतरङ्गसंगते सागरे यानपात्रमारुह्य परतीरं व्रजामि, किं वा चामुण्डायाः पुरस्तीक्ष्णक्षुरिकाविदारितोरुयुगलसमुच्छलल्लोहितपङ्किलभूतलं मांसखण्डैर्बलिं ददामि, किं वा रात्रिंदिवं

12) P भजन्त्येवनतिं 16) P shows blank space for भवान्. 20) B सौहृदोऽन्यमनाः सत्यव्रतो 24) B 'विन्मदाक्षरश्चेति 32) B तया for ततस्तया 35) B inter. कान्तां & श्रियं. 36) B द्वितीय च 41) B संकीर्णे तुङ्ग

अपहस्तिताशेषव्यापारो रोहणपर्वतभुवं खनामि, किं वा व्यपगतभयप्रचारः सत्पुरुषसंगतो धातुवादं वितनोमि ।' इत्यनल्पविकल्पसंकल्पमालाकुलितस्वान्त एकस्मिन् स्थाने सागरदत्तः श्रीफलपादपस्य प्रसूतं प्ररोहमेकं ददर्श । तं च विलोक्य संस्मृतामिनवशिक्षितखन्यवादेन तेन 'नमो धरणेन्द्राय नमो धनाय नमो धनपालाय' इति मन्त्रं पठता भूमितलं खनित्वा निधिर्लोचनगोचरमानीतः । यावता स तं निधिं गृहीतुं चिन्तयति स्म तावता व्योम्नि इति वाणी प्रससार । 'वत्स, यद्यपि त्वया सकलो ऽपि निधिर्वीक्षितः परं स्तोकमञ्जलिमाने मूलद्रव्यकृते गृहाण' इत्येवं श्रुत्वा तेन श्रेष्ठिसूनुना एक एवाञ्जली रूपकाणां जगृहे । निधिरपि तदैवादृश्यतामगमच्च । तद्धनं निबद्धं चानेन स्कन्धनिक्षिप्तद्वितीयवाससः प्रान्ते ।

§ २७) ततो वणिगुत्तमेन चिन्तितम् । 'अहो, चापल्यं दैवस्य ।

पूर्वं दत्तो निधिर्दैव कथं पश्चाद्धृतः कथम् । तव वृत्त्या परिज्ञातं सर्वथा ते गतिश्चला ॥ २९८

तथाप्येतावतापि वित्तेन द्रविणस्य सप्तकोटीरर्जयित्वात्मीयं प्रतिज्ञातमवितथं करिष्ये यदि दैवं स्वयं माध्यस्थ्यवृत्तिमङ्गीकरिष्यते ।' इति चिन्तयन् परितुष्टमनास्तस्यामेव नगर्यां विपणिमार्गे कमपि वणिजं परिणतवयसं मार्दवादिगुणोपेतं स्वभावतो ऽपि सुशीलमद्राक्षीत् । तं च निरीक्ष्य चिन्तितमनेन । 'अहो, रमणीयतमाकृतिर्ज्यायान् वणिक्पुङ्गवो ऽयं दृश्यते, ततो ऽमुष्य पादपतनं न्याय्यम्' इति ध्यात्वा तं नत्वा च सागरदत्तः पुरतो निविष्टः । तेन श्रेष्ठिना महता संभ्रमेण 'स्वागतं भद्राय' इति भाषितः सः । तदा च तस्मिन्नगरे कस्मिन्नपि महोत्सवे प्रवृत्ते तस्य श्रेष्ठिनो हट्टे प्रत्यासन्नग्रामीणजनो ऽतीवसमुत्सुकचेताः समस्तपण्यग्रहणार्थमभ्येति, तं च श्रेष्ठिनं जराजर्जरिततनुं पण्यानि दातुमक्षममवगम्य सागरदत्तः प्रोवाच 'तात, त्वं विपणिमध्यतः क्रयाणकान्यानीय मम समर्पय यथैतानि तोलयित्वा युक्त्यास्मै जनाय ददामि' इत्युक्त्वा दातुं प्रवृत्तः । तत एषः 'क्षिप्रं ददाति' इत्यवगत्य सर्वो ऽपि जनस्तदापणमायातवान् । तेन तत्क्षणमात्रेणापि पण्यान्यर्पयित्वा समग्रो ऽपि जनः प्रेषितः । क्रयाणकैर्विक्रीतैर्महत्यर्थलाभे श्रेष्ठिना चिन्तितम् । 'यदयं को ऽपि महाकुलसंभवः पुण्यवान् दारको यद्ययं मम निलयमलङ्करोति तदतीव सुन्दरं भवति' इति चिन्तयता जल्पितम् । 'भो वत्स, त्वं कुतः स्थानादागतो ऽसि ।' तेनोक्तम् । 'तात, चम्पापुरीतः ।' श्रेष्ठिना जगदे । 'वत्स, त्वया मम गृहमलङ्करणीयम् ।' स सागरदत्तः श्रेष्ठिना समं निकेतमुपागतः । प्रीत्या स्वधुर्यपदोशीरकादियुक्तिपया संमानितः । कियद्दिनानन्तरं तेन प्रवयसा तद्रूपगुणग्रामरञ्जितचेतसामिनवोद्भिन्नयौवना निर्मलमुखमृगाङ्ककान्तिकलापकलिता विकस्वरकुवलयदलदीर्घलोचना कुसुमबाणप्रणयिनीनिभा कनी सागरदत्ताय प्रदत्ता, परं तेन तत्परिणयनं न मानितम् । तेनोक्तम् । 'तात, किंचिद्वक्तव्यमस्ति । केनापि हेतुना स्ववेश्मतो निःसृतो ऽस्मि, यदि तत्कार्यं प्रमाणकोटिमध्यारूढं ततो यद् यूयं भणिष्यथ तदवश्यं करिष्ये । यदि तन्न निष्पद्यं ततो मम केवलं ज्वलन एव शरणमतो ऽस्मिन्नर्थे सांप्रतं तात, प्रतिबन्धं मा कार्षीः ।' श्रेष्ठिना निगदितम् । 'एवं व्यवस्थिते मया भवतः किं कर्तव्यम् ।' तेनोदितम् । 'यदि त्वं मम सत्य एव तातस्तदा मद्धनेन क्रयाणकं परतीरयोग्यं गृहाण भाटकेन यानपात्रं च । मया परतीरं गन्तव्यम् ।' श्रेष्ठिना जल्पितम् । 'एवं भवतु' इति तद्दिनादेव श्रेष्ठिना पुरोभूय प्रतिपादितम् । सागरो ऽगण्यपण्यं संगृह्य निमित्तविद्दत्ते मुहूर्ते समुद्रदेवतामभ्यर्च्य सपञ्चरणगुरुं गुरुं प्रणिपत्यार्हतामर्हणां कृत्वा तं वणिजमभिवाद्यापृच्छ्य च स्मृतपञ्चपरमेष्ठिनमस्कारः प्रवहणमारूढः, पूरितः सितपटः, लब्धो ऽनुकूलः पवनः, ततो नदीशमुल्लङ्घ्य क्रमेण यानपात्रं यवनद्वीपमवाप । तत्र क्रयविक्रयेण समार्जितसप्तकोटिः सागरदत्तस्तुष्टमना व्यावृत्य स्वदेशं प्रति प्रचलितः ।

§ २८) अथो तद्बोहित्थं सागरान्तः कर्मपरिणत्या संजाताकालकज्जलश्यामलसजलजलदान्धकारच्छादितव्योमतलादृश्यमाननक्षत्रतया निर्यामकैरपथप्रेरितं कस्यापि गिरेर्द्रोन्तके आस्फाल्य कामिनीनिवेदितरहस्यमिव त्वरितं प्रस्फोट । तत्र च निखिले ऽपि जने विपन्ने केवलं सागरदत्तः प्राप्तफलकः कथमपि तुङ्गतरङ्गमालाभिः प्रेर्यमाणः पञ्चभिरहोरात्रैश्चन्द्रद्वीपमवाप्य मूर्च्छानिमीलितलोचनस्तीरपादपाधोभागे क्षणमेकं पवनस्पर्शलब्धचेतनस्त्रपातरलितचेतोवृत्तिः क्षुधार्तः सर्वत्र परिभ्रम्य क्वचन प्रदेशे नालिकेरनारङ्गमातुलिङ्गपनसदाडिमीप्रमुखद्रुमफलैः कृतप्राणाधारश्चन्दनलवलीलवङ्गलतागृहं

1) P प्रचार पुरुष 3) On खन्यवाद B has a marginal gloss like this भूमिगतनिधानखननविधि 7) P B रुपकाना 10) B तस्स for तव 12) B मध्यस्थवृत्ति°. 13) P तेन चिंतितं for चिन्तितमनेन 21) C दारकोऽपि यद्ययं 24) B has a marginal gloss कुशीर शयनासने वसिपुर्भोजनाच्छादो 27) C तात वक्तिं किंचिद्वक्तव्यमस्ति [यदहं] 29) B has a marginal gloss प्रतिबंधं वाधदं । 32) P अर्घ्य पर्ण्य 37) B गिरेर्डंतके 38) B त्वरितं प्रस्फोट 40) B °स्त्रपाणपतरलित° 41) B has a marginal gloss on लवली thus लतानिशेष

वीक्ष्य संजातचित्तकौतुकस्तमुद्देशं यावदाजगाम तावत्सहसा कस्यापि स्वर इव श्रवणातिथित्वं भेजे। तमाकर्ण्य चिन्तितमनेन। 'अत्र तावत्पूर्वं मनुष्यप्रचारो ऽपि न कथं बालाया इव शब्दः। अहो, अहमपि कुत्र प्राप्तो ऽस्मि यत्र कथास्वपि श्रूयते यत् स्वप्ने ऽपि न दृश्यते तदैव दैवेन घट्यते' इति चिन्तयता यावन्निरूपितं तावत्कदलीतरुनिकुञ्जान्तरे रक्ताशोकतरुतले ऽसामान्यरूपातिशया गुणग्रामाभिरामा काचित्प्रत्यक्षा वनदेवतेव वनिता दत्तकण्ठपाशा दृष्टा। ततस्तया प्रजल्पितम्। 'श्रूयतां वनदेव्यः, परस्मिन्नपि जन्मान्तरे ममेदृशं मा भूयात्' इति भणन्त्या तयात्मोद्बन्धे। अत्रान्तरे तेन करुणाशरणेन सहसागत्य तस्याः पाशश्चिच्छिदे, पतिता सा धरायां वायुनाश्वासिता च। चन्दनकिशलयरसेन विलिप्तं वक्षःस्थलम्। तया लब्धसंज्ञया सागरदत्तो ददृशे। तं वीक्ष्य ससाध्वसहृदया स्ववासः संवरीतुमारेभे। तेन भणिता।

'पुष्पबाणप्रिया किं त्वं वनलक्ष्मीः किमत्र वा। किमात्मारोपितो दुःखे निवेदय कृशोदरि ॥' २९९
उवाच सा 'पतिर्नैव नास्ति लक्ष्मीर्वनस्य च। समाकर्णय मद्वृत्तं त्वमेकाग्रमनाः पुनः ॥ ३००

§ २९) अस्ति दक्षिणमकराकरतीरे जयतुङ्गा नाम नगरी। तत्रोत्तुङ्गश्रिया वैश्रमण इव वैश्रमणः श्रेष्ठी। तस्याहं दुहितात्यन्तप्राणप्रिया। अन्यदादिवसे स्वभवनकुट्टिमतले शय्यायां प्रसुप्तानेकशकुनिश्वापदकलकलरवेण विबुद्धा यावच्चिन्तयामि तावदनन्तपादपशतदलावलिनिरुद्धतरणिकिरणजालं कान्तारमेव पश्यामि। तच्च वीक्ष्य भयावेशकम्पिततनुलता विलपितुं प्रवृत्ता।

भविष्यामि कथं तात निराशा हा त्वयोज्झिता। इदानीं कानने भीमे शरणं भावि कुत्र मे ॥ ३०१
अत्रान्तरे 'तव शरणमस्मि' इति जल्पन् दिव्यरूपधारी को ऽपि पुमान् लतानिकेतनतः समुत्तस्थौ। तमालोक्य द्विगुणतरं समुपजातक्षोभा रोदितुमारेभे, स च मत्समीपमुपागत्य वक्तुं प्रावर्तत।

'मुञ्च माश्रूणि तन्वङ्गि न करोमि तवाक्षमम्। त्वद्रूपाक्षिप्तचित्तेनापहृतासि मयाधुना ॥ ३०२
बाला जगाद सा 'कस्त्वं केन ते कथितासि च।' तन्निशम्य ततो ऽवोचत्स 'शृणु शुभानने ॥ ३०३

§ ३०) अस्ति वैताढ्यपर्वतः। तच्छिखरनिवासिना मया विद्याधरेण महाबलवता त्रिदशवनितानामपि मानसे क्षोभकारिणा निखिलमपि क्षोणीतलं कलयतोपरितनकुट्टिमतले तलिने प्रसुता नलिनोदरी त्रिभुवनाधिकशालिनी इतिकृत्वा भवती मम मनसि प्रवेशं चक्रे।

प्रेमोल्लसति कस्यापि क्वापि दैवयशात्तथा। विनेतुं शक्यते यन्न विलग्नं वज्रलेपवत् ॥ ३०४
ततो 'नापरो ऽत्रोपायो ऽस्ति' इति विचिन्त्याहं सुप्तां त्वामपहृत्य निजगुरुशङ्कितो निजनगरं न गतः, किंत्वत्र द्वीपे विजने समागतो ऽस्मि, अतो मया सह भोगान् भुङ्क्ष्व, दुःखं मा धेहि।' अतो मया चिन्तितम्। 'तावदहं कन्या न कस्यापि दत्ता, अन्येनापि वणिजा परिणेतव्या, ततो यद्ययं सुन्दराकृतिर्विद्याधरः त्रिजगतीयुवतिजनवल्लभः स्नेहमोहितमना यदि मत्करग्रहं करोति तदा मया किं न लब्धम्' इति चिन्तयन्त्या मयोक्तम्। 'अहं त्वयात्र कानने आनीता यत्तुभ्यं रोचते तत्समाचरेः।' ततः सहर्षसंभृतचेताः समजायत। अत्रान्तरे कम्पितकरालकरवालभैरवो विद्याधर एकः 'रे रे अनार्य, कुत्र व्रजसि' इति जल्पन् प्रहर्तुमायातवान्। ततो मे दयितः समाकृष्टरिष्टी 'रे रे दुष्ट, मत्कलत्रापहारं कर्ता' इति वदन् तेन समं योद्धुमारेभे। ततस्तौ युध्यमानौ निशितासिघातैः परस्परं लूनशीर्षौ क्षितौ निपतितौ विलोक्य महद्दुःखाक्षिप्तचित्ता विलपितुं प्रवृत्ता।

'हा सौभाग्यनिधे नाथ रूपश्रीजितमन्मथ। मामेककां परित्यज्य वने कुत्र गतो भवान् ॥ ३०५
गृहादानीय मुक्त्वात्र मामेकां काननान्तरे। जीवेश मा व्रज क्वाप्यथवा नय निकेतने ॥' ३०६

§ ३१) तत एवं विलप्य मरणकृताध्यवसायया मया 'यथा भूयो भवदुःखानां पदं न भवामि' इति चिन्तयन्त्या लतावेश्मनि लतापाशं विरचय्य स्वं च शोचन्ती स्त्रीजन्म गर्हमाणा कुलदेवीं संस्मर्य मातापितरौ प्रणम्य चात्मा बबन्धे। अतो न जाने किं वृत्तम्, केवलं भवान् वीज्यमानो दृष्टः। 'कुतस्त्वं कुवलयः, कथमत्र दुर्गमे द्वीपे।' ततः सागरदत्तः स्ववृत्तान्तं प्रतिज्ञारोहणादि यानपात्रविघटनान्तं निवेदयामास। ततस्तयोक्तम्। 'एवंविधे विषमे कार्ये संप्रति त्वया किं करणीयम्।' सागरदत्तेनोक्तम्। 'सत्पुरुषाः प्राणान्ते ऽपि न प्रतिज्ञाभङ्गं विदधति।' तया जल्पितम्। 'दैवायत्ते प्रतिज्ञानिर्वाहे न किमपि भद्र, तव दूषणम्, तत्किं त्वया संप्रति विधेयम्।' स भूयो ऽप्युवाच 'ममेयं समुद्रान्तर्भ्रमत एकादश

3) B तदेव for तदैव　5) P B om. वनिता　6) P भगन्त्या·　7) P वलिप्तं for विलिप्तं　12) P B °करप्रतीरे, B नगरी उत्तुङ्गश्रिया.　13) B प्रसुप्ता। अनेक　17) P om. इति, B दिव्यधारी, P B om. पुमान्　[illegible]) P प्रसुप्ता। मलिनोदरी C प्रसुप्ताऽमलिनोदरी　26) P B द्वीपे निर्जने　40) B om. तया

मासाः संजाताः । संप्रत्येष द्वादशो मासः प्रवृत्तः । अनेनैकेन मासेन कथमहं सप्तकोटीः समुपार्जयामि । अथो समुपार्जिता अपि सप्तकोटीः कथं गृहं नेष्यामि । तेनाहं सुन्दरि, भ्रष्टप्रतिज्ञो ऽभवम् । न मम भ्रष्टप्रतिज्ञस्य जीवितुं युक्तम् । ततो ज्वलनं प्रविशामि ।' [ तयोचे । ] 'यद्येवं प्रतिज्ञाभङ्गे भवान् हुताशने प्रविशति तत्राहमपि भर्तृवियुक्ता त्वमिव कृशानुं साधयिष्ये, अतो ऽन्वेषयतां कुतो ऽपि पावकः ।' तेन भणितम् । 'भद्रे, न युक्तमेतत्तव' । [ ततस्तयापि भणितम् । ] मया किमत्र वने कर्तव्यम्' इति । ततस्तेन चित्यां विरच्यवारणिकाष्ठाग्निमोप ज्वलनः प्रज्वालितः । ततस्तेनोक्तम् । 'भो लोकपालाः श्रूयतां, मम प्रतिज्ञा संवत्सरेणापि न पूर्णा, इति भ्रष्टप्रतिज्ञस्य मम ज्वलनः शरणमिति ज्वलनं विशामि' इति यावच्चित्यां गवेषयति तावच्चिता शतपत्रतां प्राप । ततो [ सागर- ] दत्तः कौतुकाक्षिप्तहृदयो व्यचिन्तयदिति ।

'किमन्यज्जननं किं वा स्वप्नः किं मनसो भ्रमः । किमिन्द्रजालं यच्चिता जगाम शतपत्रताम् ॥' ३०७

अत्रान्तरे पद्मरागघटितं व्योममण्डले । मुक्तावचूलप्रालम्बं विमानं समुपस्थितम् ॥ ३०८

चारुकाञ्चनकोटीरधरस्तत्र सुरः स्फुरन् । तेजसा भूयसा चञ्चद्रत्नखण्डश्रुतिकुण्डलः ॥ ३०९

ईषदास्यहास्यविकस्वराधरतया दशनस्फुरत्किरणधोरणिसमुद्दीपितदिगङ्गनाननेन तेनोक्तम् । 'अहो सागरदत्त, किं त्वया पामरजननिषेवितो विबुधनिन्दितः स्ववधः प्रारब्धः । यतः,

प्रायेण दुःखसंतप्ता वनिता साहसाश्रिता । तनोति तद्वरं भद्र सांप्रतं सांप्रतं न ते ॥ ३१०

एतच्च कथं विस्मृतम्, यत्त्वं सौधर्मविमाने ऽस्माभिः सममुत्पन्नः । तत्र तावत्त्वया कर्केतनेन्द्रनीलपद्मरागराशयः प्रमुक्ताः, अतः किमेताभिः सप्तधनकोटीभिः ।

तत्त्वं गृहाण सम्यक्त्वं निशाभुक्तिनिवर्तनम् । महाव्रतानि पञ्चैव वा यतः सप्त कोटयः ॥ ३११

§ ३२ ) अथ द्रव्याभिलाषी भवांस्तदा त्रिगुणाः सप्तकोटीः स्वीकुरु । मम विमानमारोह यथा त्वामह्नाय निलयं नयामि ।' एतदाकर्ण्य देवर्द्धिं वीक्षमाणस्य तस्य सम्यगूहापोहं कुर्वतः पूर्वजातिस्मृतिरुपेदे । ज्ञातं च यथा 'अहं स पद्मप्रभश्च्युत्वात्र समुत्पन्नः । एष पुनः पद्मकेसराभिधानो ऽनिमेषः । तत्र मया पूर्वजन्मनि भणित आसीत्, यथा 'स्वयासि श्रीमतो जिनेश्वरस्य शासने संयोज्यः' तत्स्मरतानेनामुतो मृत्युतो रक्षितो ऽस्मि । अहो दृढप्रतिज्ञः, अहो परोपकारी, अहो स्नेहपरः, अहो मित्रवात्सल्यम् । यतः,

मानुष्ये जीवितं सारं ततो ऽपि प्रेम सुन्दरम् । उपकारः परं प्रेम्णि तत्रैवावसरो वरः ॥' ३१२

इति चिन्तयतानेन सुरः प्रणतः । तेन भणितम् । 'सुष्ठु स्मृतस्त्वया पूर्वभवः ।' सागरदत्तेनोक्तम् । 'अहो, त्वया परित्रातः संसारपतनात् । तावत्त्वया वरेण्यं कृतम् । समादिश किं कर्तव्यम्' इति । सुरेण जल्पितम् । 'अद्यापि ते चारित्रावरणीयं कर्म समस्ति, तद्भोगान् भुक्त्वा सप्तक्षामेदभिक्षः संयमो विधेयः' इति । ततस्तेनास्मि विमाने समारोपितः । गृहीता च मया सा समं बाला । क्षणेनैव जयश्रीनगरीं प्राप्तः । तत्र जीर्णश्रेष्ठिवेश्मनि समवतीर्णेन मया सा कन्या श्रेष्ठिसुता च परिणिन्ये । ततो विमानारूढश्चम्पापुरीमगमम् । वन्दितो महाभक्त्या गुरुजनः । ततो देवेनोक्तम् । 'भद्र, तव दशवर्षसहस्राण्यायुः, तत्त्रीणि गतानि, पञ्च सहस्राणि भोगान् भुङ्क्ष्वेति, सहस्रद्वयं श्रामण्यं पालनीयम्' इत्युक्त्वैकविंशतिधनकोटीस्तद्गृहाङ्गणे ऽभिवृष्य गतः स सुरः । सो ऽथ चिरविरहखिन्नां पूर्वप्रियां संभाव्य ताभिरम्भोजदृग्भिः सह क्रीडां रचयन् प्रणयिजनं मानयन् क्रमेण निर्विण्णकामभोगो ऽवगतपरमार्थः स्मृतपूर्वभवदैववाक्यः क्षीणभोगफलकर्मा वैराग्यमार्गमुपगतः । ततश्चैत्येष्वष्टाह्निकां निर्माय कृतकृत्यः पुण्यवतां स्थविराणामन्तिके ऽन्तेवासी जातः । भोः कुवलयचन्द्र, सो ऽहं सागरदत्तः । तत्र चाधीतसर्वशास्त्रस्य गृहीतद्विविधशिक्षस्याङ्गीकृतैकाकित्वविहारप्रतिमस्य ममावधिज्ञानं प्रादुरभूत् । 'अधो यावद्रत्नप्रभायाः सर्वप्रस्तरान् ऊर्ध्वं यावत्सौधर्मविमानचूलिकां तिर्यग् मानुषोत्तरशिखरम्' एतत्प्रमाणे [ अवधौ ] जाते मया 'लोभदेवपद्मप्रभदेवौ' इति निजं प्राच्यं भवद्वयं ददृशे । एतद्विलोक्य चिन्तितं मया । 'अहो, ये पुनस्तत्र चत्वारस्ते कथं संप्रति' इति चिन्तयन् यावदुपयुक्तो ऽस्मि तावच्चान् दृष्टवान् तथा यथा चण्डसोमः ।

2) P अथोपार्जितसप्तकोटी B अथोपार्जिता अपि C अथो समुपार्जिताऽपि 3) P B om. [ तयोचे ] 4) P भर्तृप्रयुक्ता 5) P B om. [ ततस्तयापि भणितम् । ] 6) P चित्या B चित्तां, P °काष्ठान्यानिर्माय B °काष्ठान्यानीय, B प्रज्वालितः । तेनोक्तं, P om. ततस्तेनोक्तम् 7) P संवत्सरेणापि न पूर्णादत्त । कौतुकाक्षिप्त etc. obviously P has missed some portion between पूर्णा and दत्त. Originally B also read like P, but by an additional line it is made to read thus संवत्सरेणापि न पूर्णा इति भ्रष्टप्रतिज्ञस्य मम ज्वलनः शरणमिति ज्वलनं विशामीति यावच्चित्यां गवेषयति तावच्चिता शतपत्रतां प्राप ततो दत्त. कौतुकाक्षिप्त etc. C reads thus संवत्सरेणापि न पूर्णा तेन सम्प्रति स्वप्रतिज्ञापूर्वं प्राणान् त्यजामि' इति यावत्प्राणान्मुञ्चति [ तावत्सा चिता पङ्कजायमाना जाता । तां दृष्ट्वा सागर ] दत्त. कौतुकाक्षिप्त etc. 15) B एतत्कथं 16) B om. अतः, P कोटिभिः 18) P B विमानमारुह्य 20) P B °धानोऽनिमिषः. 21) P तत्र सत्ता 23) B दृढप्रतिज्ञा 36) B सर्वशास्त्रगृहीत 37) C adds [ अवधौ ] before जाते

स स्वर्गे पद्मचन्द्रस्ततश्च्युत्वा विन्ध्याटव्यां कण्ठीरवः । पुनर्मानभटो ऽपि विपद्य पद्मसारः स्वर्गी, ततो ऽयोध्यापुर्यां भूपतेर्दृढवर्मणः सूनुः कुवलयचन्द्र इति । तथा मायादित्यश्च्युत्वा त्रिदिवे पद्मवराभिख्यो ऽनिमेषो भूत्वा दक्षिणस्यां दिशि विजयाभिधायां पुर्यां भूधनश्रीमहा(विजय)सेनस्य दुहिता कुवलयमाला। एतत्परिज्ञाय मया चिन्तितम् । 'तदा तपस्विभवे मम संमुखमेतैर्भणितमासीत्' यथा 'यत्र तत्रोत्पन्नानामस्माकं भवता सम्यक्त्वं दातव्यम्' इति सा यावन्मम प्रार्थना स्मृतिपथमागता तावदेष पद्मकेसरत्रिदशः समागत्य मां प्रति स्तुतिमाततान ।

'समुत्पन्नावधिज्ञान ज्ञातजन्तुभवान्तर । जय त्वं श्रमणाधीश धर्माचार्यस्त्वमेव मे ॥' ३१३

§ ३३ ) तदाकर्ण्य तं निरीक्ष्य च मया जल्पितम् । 'भद्र, कथय किं क्रियताम् ।' ततो जल्पितं नाकिना । 'भगवन्, पूर्वं मया प्रतिपन्नमिति, यथा सम्यक्त्वदानेन पद्मसारपद्मवरपद्मचन्द्रजीवा अनुग्राह्याः । एते शुद्धौ मिथ्यादृष्टिकुललब्धजन्मानौ, एकः सिंहश्च । तदेते ऽतिदुर्लभे श्रीजिनेन्द्रनिगमे प्रतिबोधनीयाः । ततः समागच्छ यथा गच्छावस्तस्यामयोध्यापुर्यां कुमारं कुवलयचन्द्रं प्रतिबोधयावः ।' मयादिष्टम् । 'न त्वयोपायः सुन्दरः समुपदिष्टः ।

यतः सुखनिमग्नानां रतिर्धर्मे न जायते । नीरुजामौषधे न स्यादादरस्य लवो ऽपि हि ॥ ३१४

तत्तस्य कुमारस्य राज्यर्द्धिग्धापितस्य पितृमातृभ्रातृभगिनीस्वजनवयस्यादिभ्यो ऽनतिदूरीकृतस्य च कुतो बोधावसरः । यदुक्तम् ।

"जननीजनकभ्रातृवियोगेनातिदुःखिताः । यावन्न देहिनस्तावद्धर्मकर्म न तन्वते ॥" ३१५

कुमारानयनाय त्वं भद्र गच्छाधुना त्वहम् । चण्डसोमो हरिर्यत्र तत्र गच्छामि कानने ॥ ३१६

§ ३४ ) तत्रैकान्ते कुमारः पितृबान्धववियोगकलितः सुखं सम्यक्त्वं ग्रहीष्यते' तदुक्त्वाहमिहागतः । पद्मकेसरः संप्राप्तो ऽयोध्यायाम् । तत्र च तत्क्षणनिर्गतस्त्वमश्वारूढो बाह्यकेलिगतो दृष्टः पद्मकेसरेण । स तुरङ्गं प्रविष्टः । त्वां गृहीत्वा तुरग उत्पतितः । त्वया च तुरगः प्रहृतः । पद्मकेसरेण च मायया मृतो दर्शितो न पुनर्मृतश्च, केवलं तवाशाभङ्गः कृतः । ततः कुमार, सम्यक्त्वलाभार्थमनेनाश्वेनाक्षिप्य त्वमानायितः । एतानि तानि रत्नरूपाणि विलोकयेति । ततः कुवलयचन्द्रः स्वं प्राच्यरूपं तथा कुवलयमालापाश्चापरेषामपि पूर्वजन्मस्मृतिनिमित्तानि तान्यपश्यत् । उत्पन्नं च तद्दर्शनेन कुमारस्य सिंहस्य च जातिस्मरणम् । मुनिना समादिष्टम् । 'कुमार, ततस्त्वं विचारय । 'असारः संसारः, तीक्ष्णा नरकव्यथा, दुर्लभः श्रीजिनप्रणीतो धर्मः, दुष्प्रतिपालः संयमभारः, बन्धनसदृशाः सदननिवासः, निबिडनिगडप्राया दाराः, महाभयमज्ञानम्, न सुलभा धर्माचार्याः, महाभाग्यलभ्यं मनुष्यजन्म' इत्येनं च विचार्य 'सम्यक्त्वं गृहाण, द्वादशव्रतान्यङ्गीकुरु, परिहर पापस्थानानि ।' इत्यमात्मना पूर्वजन्मवृत्तमपाश्रयाद्दृतिं च निशम्य भक्तिभरप्रणतोत्तमाङ्गः कुवलयचन्द्रो वक्तुं प्रवृत्तः । 'अहो, अनुगृहीतो भगवता सम्यक्त्वदानप्रसादेनेति तावन्मम देहस्व जिनराजदीक्षानुग्रहम् ।' मुनिना प्रोक्तम् । 'त्वमुत्सुकमना मा भव, तथापि भोगफलं कर्म समस्ति, अतः प्रव्रज्या न प्राप्ता । सांप्रतं पुनर्द्वादशविधं श्रावकधर्मं प्रतिपालय ।' एतदाकर्ण्य कुमारेणोक्तम् । 'भगवन् श्रूयताम्, अतः परं श्रीजिनान् साधूंश्च विना नान्यं नमामि, श्राद्धधर्मं च पालयिष्ये ।' भगवता भणितं 'भवतु' इति । ततो मुनिना पुनरप्युक्तम् । 'भो मृगराज, त्वया पूर्वजन्मवृत्तं श्रुतम् । वयमपि तद्वचः संस्मर्य समागताः । तावदङ्गीकुरु सम्यक्त्वम् । गृहाण देशविरतिम् । मुञ्च निस्त्रिंशत्वम् । परिहर प्राणिवधम् । त्यज सर्वथा क्रोधम् । अनेन दुरात्मना क्रोधेनावस्थामिमामुपनीतो ऽसि ।' इदं वचो निशम्य मृगाधिपः सर्वाङ्गरोमाञ्चितश्चलद्दीर्घलाङ्गूलः समुत्थाय मुनिं प्रणम्य प्रत्याख्यानं ययाचे । भगवता ज्ञानेनादिष्टम् । 'कुमार, एष केसरीदं जल्पति, यथा ममानशनं देहि, यदस्माकमपुण्यवतां नास्ति प्रासुकाहारः । सदैव वयं मांसाशिनः, अतो मम न श्रेयं जीवितम् ।' ततो मुनिना तस्य प्रपन्नप्रतिबोधस्य निराकारमनशनमदायि । स च तदर्हं रत्न[illegible]त्रसस्थावरजन्तुजातविरहिते स्थण्डिले संसारासारतां चिन्तयन् पञ्चनमस्कारपरायणः परित्यजन् स्वजातिदुर्दान्तत्वमुपाविशत् ।'

---

2) B [illegible], B °[illegible] 3) P B दिदि [illegible], P B [illegible] 11) B '[illegible] 14) B [illegible] (this is a correction on the original reading something like the one adopted in the text), B °[illegible] 17) B [illegible] 18) B [illegible] 19) P om. [illegible], shown by blank space, P B [illegible] दर्शितो न पुनर्मृत [illegible]. 26) B [illegible] B [illegible] 27) B [illegible] 35) B [illegible]

कुमारेणोक्तम् । 'भगवन्, सा कुवलयमाला कथं बोध्या ।' भगवतादिष्टम् । 'सापि तत्र विजयपुर्यां चारणश्रमणकथानकेन स्मृतपूर्वजन्मवृत्तान्ता गाथाचतुर्थपादं राजद्वारे सर्वजनदृश्यं करिष्यति । तत्र गत्वा गाथापूरणतस्त्वमेव तां परिणेष्यसि । सा पुनस्तव महादेवी भविष्यति । ततस्तत्कुक्षिभूरेष पद्मकेसरत्रिदशः प्रथमः पुत्रो भावीति । तत्त्वमपाचीमभिगम्य कुवलयमालां प्रबोधय' इति निवेद्य सद्यः श्रमणेश्वरः ससार । सुपर्वापि 'अहं संबोध्यस्त्वया' इत्युक्त्वा गगने समुत्पपात । कुमारः 'भगवतादिष्टं कर्तव्यम्' इति चिन्तयन् दक्षिणाभिमुखं चलितः पश्चात्सं विलोक्य चिन्तयामासेति । 'यदयं साधर्मिको ऽथवा पूर्वसंगतः स्निग्धबन्धुरेकगुरुदीक्षितश्चानशनी च, अतो मयायमुपचर्यः । यद्यस्य कायपरित्राणं न करिष्ये तदायं केनापि व्याधेन शरैर्निहतो रौद्रध्यानवशमानसः श्वभ्रतिर्यग्दुःखभाजनं भावी' इति विचार्य भव्यरीत्या तेन प्रतिजागरितो भणितश्चेति ।

'जनौ जनौ मृगेन्द्र त्वमयोधिर्यत्क्षुधा मृतः । तथा म्रियस्वेति यथा भूयः स्यान्न मृतिस्तव ॥' ३१७

§ ३५ ) एवं धर्मकथां श्रुत्वा तृतीयदिने हर्यक्षः क्षुधाक्षामकुक्षिर्नमस्कारपरायणः समाधिना मृत्वा सौधर्मे द्विसागरोपमायुःस्थितिः सुमनाः समुदपद्यत । ततः केसरिशरीरसंस्कारमाधाय कुमारः कुवलयचन्द्रो दक्षिणाभिमुखमचालीत् । ततश्च

गिरिनिर्झरझात्कारैर्वाचालितदिगन्तरम् । त्रिपथं सप्तपत्राढ्यं नवबाणद्रुबन्धुरम् ॥ ३१८

शाखिस्खलत्स्फुरद्बन्धलसद्भ्रमरविभ्रमम् । स्थाने स्थाने श्रूयमाणकेकिझंकारनिःस्वनम् ॥ ३१९

दारुणश्वापदव्रातसंकुलं केतनं घनम् । कुमारः भ्रमयन् प्राप विन्ध्यपर्वतकाननम् ॥ ३२०

त्रिभिर्विशेषकम् ॥

तदा तत्र नखंपचवालुकानिवहे ज्वलद्दहलदावानलनिर्गच्छद्धूमश्यामलितककुम्मण्डले सर्वतः शुष्यमाणशाखिनि वात्याविवर्द्धिर्वर्तितरजःसंचये च प्रचण्डमार्तण्डकिरणदण्डसंशोषितक्षितितले भीष्मग्रीष्मभरे ऽत्यन्ततपासंशुष्यल्लतालुकः कुमारः सलिलावलोकनाय कंचिद्भूभागं बभ्राम ।

ततस्तदन्तर्वेसुधायोषिद्भाले विशेषकः । नृत्यत्त्रिदशसुन्दर्या भुवि स्रस्तं नु कुण्डलम् ॥ ३२१

[illegible] ॥ ३२२

३

३२४

चतुर्भिः कलापकम् ॥

तमालोक्योच्छ्वसितमिव हृदयेन, प्रत्यागतमिव बुद्ध्या सर्वथा प्राप्तमनोरथ इव कुमारः समभूत् । तत्तीरस्थितेन कुमारेण चिन्तितम् । 'आयुर्वेदशास्त्रमध्ये मया श्रुतमासीत्, यत्किल दुस्सहक्षुत्तृषापरिश्रमभागिनापि देहिना तत्क्षणं पयो न पेयमिति । यस्मादेते सप्तापि धातवः प्रकुप्यन्ति, वातपित्तश्लेष्मादयो दोषा उत्पद्यन्ते, अतो मम श्रान्तस्य सद्यः शरीरप्रक्षालनपानादिकं नैवोचितम्' इति विचिन्त्य तत्तीरतरोरेकस्य तले क्षणमेकं विश्रम्य ततः कुमारः सरःसलिलावगाहनं पयःपानं च विदधे । ततः पुष्पफलस्पृहयालुः सर्वतः परिभ्रमन् कस्मिन्नपि प्रदेशे लतानिकेतने ऽप्रतिमां पद्मप्रतिमां यावन्निरूपयति तावत्तत्र यक्षशिरोदेशे सकलत्रैलोक्यवन्धोर्भगवतो ऽर्हतो मूर्तिर्मुक्तामयी तल्लोचनगोचरमागता । कुमारस्तामालोक्य हर्षवशविकसल्लोचनः स्तुतिमाततान ।

जय त्रिभुवनाधीश जय निर्मोह निर्मम । जय कारुण्यपाथोधे जय श्रेयःश्रियोनिधे ॥ ३२५

§ ३६ ) ततः कुमारस्तां प्रतिमां जलेन प्रक्षाल्याहिमरुचिमरीचिवीचिपरिचयपेशलैः कमलैरभ्यर्च्य भक्तिभृतस्वान्तः पर्यष्टौदिति ।

संसाराम्बुधिपापनीरलहरीमध्ये भृशं मज्जतस्त्राता त्वं भुवनैकभूषणमणे त्वं नायकस्त्वं गुरुः ।
किंचान्यज्जनकस्त्वमेव जननी दीनत्वभाजो मम
त्वं बन्धुस्त्वमिह त्वमेव शरणं त्वं जीवितं त्वं गतिः ॥ ३२६

अत्रान्तरे निर्मितातुलजलक्षोभा सरोवरोदरतः कापि कामिनी दिव्यरूपधारिणी निःससार । तां च दृष्ट्वा चिन्तितं कुमारेण ।

14) P त्रिपत्रिमस्° 15) C काक for केकि 18) B ककुम्मंडले 21) B शेखक for विशेषक, and B has a marginal gloss तस्य वनस्य मध्ये । भूश्रीभालतिलक । 27) P B दुःसहतृषाक्षुधापरिश्रमभागिनापि 29) P पानादिकं for पानादिकं 30) P पय, पाने च वैधाव blank space स्पृहयालु, B च विधाय भोजनविषये स्पृहयालु

'समुद्रनन्दिनी किं वा किं वा विद्याधरी वरा। किं वा सिद्धाङ्गना किं वा देऽप्यसौ व्यन्तरी किमु ॥ ३२७

तां चानु करकमलधृतजलभृतकनककलशा दिव्यसरोजादिपूजोपकरणपूर्णपटलिकाविहस्तहस्ता कुब्जिका च निर्गता। ते च विलोक्य कुमारश्चिन्तयामास। 'ननु दिव्ये इमे, न ज्ञायते केन हेतुनात्रागते।' ततो यद्यत्र प्रदेशे स्थास्यामि तदेतयोर्मनसि महान् क्षोभो भविष्यति, अतो ऽस्यैव यक्षस्य पृष्ठिभागे तिष्ठामि क्षणमेकम् 'यदेते किं निमित्तमागते, किमत्र कुर्वाते' इति परिज्ञानाय तद्यक्षपृष्ठावतिष्ठत्। ततः सा मृगाक्षी भगवत्प्रतिमां सरोजैरर्चितां विलोक्य जल्पितवती। 'हे कुब्जिके, यदियमन्येनापि भगवतः श्रीमदादिनाथस्य प्रतिमा केनाप्यर्चिता, परमिति न ज्ञायते यद्देवेन मानुषेण वा।' कुब्जिकयोक्तम्। 'अत्र वने शबरैरभ्यर्चिता भविष्यति।' तयोक्तम्। 'नहि नहि विलोकय पदपद्धतिम्, यदस्यां वालुकाप्रतिबिम्बितायां पद्मशङ्खाङ्कुशादीनि लक्षणानि लक्ष्यन्ते, ततो मन्ये को ऽप्युत्तमः पुमान्' इति वदन्ती सुदती पूर्वपूजाकमलान्युत्सार्य भगवन्मूर्तिं कनककलशगन्धोदकेन संस्नाप्य विकचैरम्भोजैरभ्यर्च्य स्तुतिमातन्य ततो यक्षं संपूज्य गीतं गातुं प्रवृत्ता। तस्या गेयं लय-ताल-तान-श्रुति-स्वर-मूर्छना-ग्रामसुन्दरममेयगुणमाकर्ण्य फुल्लमनाः कुमारः 'अहो गीतम्, अहो गीतम्' इति वदन्नात्मानं प्रकटीचक्रे। सा च मृगलोचना रूपगुणकलाकलापकलिताय कुमारायाभ्युत्थानं विदधे। कुमारेणापि 'साधर्मिकवत्सलत्वम्' इति चिन्तयता प्रथममेव साभिवन्दिता। तया साध्वसत्रपाभरोत्कम्पकम्पमानस्तनभरया सविनयं भणितम्। 'देव कस्त्वम्, विद्याधरश्चक्रवर्ती सुरो वा, कुतः समागतः, क्व यास्यसि' इति। अथ भणितं कुमारेण। 'मनुष्यो ऽहं कार्यार्थी दक्षिणापथं प्रत्ययोध्यातश्चलितः। एष मम परमार्थः।

एतस्मिन् [हि] महारण्ये का त्वं यक्षः क एष च। एतस्य हेतुना केन शीर्षे मूर्तिर्जिनेशितुः ॥ ३२८

एतद्विषयं महच्चित्ते मम संप्रति वर्तते। कुरङ्गनयने तावदेतन्नाशु निवेदय ॥' ३२९

§ ३७) 'हे कुमार, श्रूयताम्।

समस्तीह भुवि ख्याता पुरी स्वर्गपुरीनिभा। माकन्दी भूरिमाकन्दा सदादीनजनस्थितिः ॥ ३३०

अरिष्टशब्दो निम्बे स्यात् कलिर्यत्र विभीतके। पलंकषो गुग्गुलौ च जने नैव कदाचन ॥ ३३१

तत्रास्ति यज्ञदत्ताभिधः सूत्रकण्ठः श्रोत्रियः। स च रूक्षाङ्गः कृशशरीरः खरस्पर्शः महद्दयदमनिजालः सदा दारिद्र्यमुद्राविद्रुतः। तस्य सावित्री प्राणप्रिया। तत्कुक्षिभवान्यपत्यानि त्रयोदश। तेषु चरमः सोमनामा तनुजः। तस्मिन् जातमात्र एव संवत्सराणामधमा विंशिका प्रविष्टा। तदनुभावेन द्वादशवात्सरीमवृष्टिरजायत।

यत्रौषध्यो न जायन्ते न फलन्ति महीरुहः। निष्पद्यते न वा सस्यं तृष्णा नैव प्ररोहति ॥ ३३२

अतो देवार्चनं नैव नैवातिथिषु सत्क्रिया। वितरन्ति न वा दानं नार्चयन्ति जना गुरून् ॥ ३३३

एवंविधे महादुर्भिक्षे यज्ञदत्तकुटुम्बं समस्तमपि क्षयमियाय। केवलं स बटुः सोमः कनिष्ठपुत्रः कथमपि कर्मवशतः क्षुधाभारोपरतसमग्रबन्धुवर्गः कदाचिद्राजमार्गे विपणिश्रेणिपतितैर्धान्यकणैः कदाचिद्भोजनक्षणदत्तबलिपिण्डेन महता कष्टेन महद्दुष्कालकान्तारं व्यतीयाय। तदनन्तरं प्रबलया प्रजानां भाग्यवशतः प्रभूतं तोयं निपतितं, सर्वत्र प्रमुदितानि जनमनांसि, सर्वत्रैवोत्सवः प्रवृत्तः। तस्मिन्नीदृशे सुभिक्षे प्रवृत्ते सोमबटोः षोडशवर्षदेशीयस्य दरिद्र इति पदे पदे जनेन हस्यमानस्य चेतसीदृशी चिन्ता संजाता।

'के ऽपि मर्त्यसहस्राणामुदरंभरयो नराः। प्राकृतादुष्कृतान्नात्मंभरयो ऽपि न मादृशाः ॥ ३३४

तादृशं सुकृतं किंचिन्नैव पूर्वभवे मया। येन मे न भवत्येव दुस्थावस्था कदाचन ॥ ३३५

सर्वदापि सुखेच्छा स्यात्को ऽस्यामुष्य मानसे। न करोति परं किंचित् श्रेयो येन सुखी भवेत् ॥ ३३६

§ ३८) तत्सर्वथैव धर्मार्थकामपुरुषार्थत्रयशून्यस्यास्मादृशजनस्य जीवितत्यजनमेव श्रेयस्तरम्, अथवा न युक्तमेतत्, यत आत्मनो वध उचितो न।

ये स्वका दृश्यमानाभ्यां भवेयुर्भविनो भुवि। श्रेयांस्तेषां वने वासो ऽथवान्यविषयान्तरे ॥ ३३७

---

3) B °दभात। अथ कथा कि कर्तव्यमिति यद् अत्र प्रदेशे P has blank space for ननु दिव्ये etc. to ततो 4) B पृष्ठिभागे 6) P कपि for हि. 13) B °कलिताय कुमारायाभ्युत्थानं. 15) P has a gap shown by blank space for एतस्मिन् etc. to एतस्मिन् [हि], B °महारण्ये को कुमार भवान् कुतः कुत्र शीर्षे वर्तते। कुमारोऽप्याकर्ण्यात्मनः कुतश्चतार्थे तवाभिवेदनं जगौ यदि महारण्ये 17) B वा for च 21) B has a marginal gloss [illegible] 22) B [illegible], B [illegible] (मान added on the margin). 26) C [illegible] but suggests an emendation thus '[illegible]'.

ततो विदेशगमनमेव समीचीनम्' इति ध्यायन् सोमवद्धमाकन्दीपुरीतो निर्गत्य दक्षिणां दिशमाश्रित्य चलितः। क्रमेणानवरतप्रयाणेन कृतभिक्षावृत्तिर्विन्ध्यगिरेर्महाटवीमाटिवान्। तत्र तदातिमहानिदाघे तृषाक्षुधार्तः प्रभ्रष्टमार्गः सिंहव्याघ्रदर्शनवेपमानमानसः कस्मिंश्चित्सरसि पयः पीत्वा वनफलान्यभक्षयत्। तत्र तेन परिभ्रमता चन्दनैलालवङ्गलतागृहे भगवतः प्रथमतीर्थनाथस्य प्रतिमां निरीक्ष्य चिन्तितम्। 'अहो, पुरापि माकन्दीपुर्यां मयेदृशी मूर्तिर्दृष्टा' इति विमृश्य तीर्थकृतः सपर्यां विरचय्य पुरो वद्धुर्जजल्प। 'भगवन्, तव नामगोत्रगुणकलादिकं न जाने, किंतु भक्त्या त्वद्दर्शनेन भवच्चरणार्चनेन च यत्किंचिद्भवति तद्भवतु' इति प्रार्थ्य रम्यो ऽयं वनाभोगः, प्रधानः सरोवरोद्देशः, कमनीयं लतागृहम्, फलिताः पादपाः, सौम्य एव देवः, मया च तद्दुस्सहदारिद्र्यपापमानकलङ्कितात्मना विदेशमपि गत्वा परप्रेष्येणैव भाव्यम्। का ऽन्या गतिरस्मादृशामकृतपूर्वतपश्चरणानाम्। यतः,

दूरं गतो ऽपि नो मर्त्यस्त्यज्यते पूर्वकर्मभिः। रोहणाद्रौ व्रजेद्यद्वा दारिद्र्यं तत्तथैव च ॥ ३३८

सर्वथापि नास्ति पूर्वविहितस्य नाशः। ततो वरमिहैव जले स्नानं कुर्वन्नेतान्येव जलकमलानि गृहीत्वा कमप्यमुं देवताविशेषमर्चयन् सुखेन घनतपसीव किं न तिष्ठामि' इति ध्यात्वा तत्रैव सोमस्तस्थिवान्।

§ ३९ ) एवं कालान्तरेण कृतभूरिफलाहारस्य तस्य निश्चलक्रिया भगवन्मूर्तिं हृदि चिन्तयतः समाधिना मृतिर्बभूव। ततो रत्नप्रभायाः प्रथमे योजनशते व्यन्तराणामष्टौ निकाया ये ऽल्पर्द्धयः सन्ति, तेषां यक्ष १ राक्षस २ भूत ३ पिशाच ४ किंनर ५ किंपुरुष ६ महोरग ७ गन्धर्वाणां ८ मध्ये प्रथमनिकाये महैश्वर्ययुतो यक्षराजो रत्नशेखराख्यः स समुत्पेदे। तत्रस्थेन तेन चिन्तितम्। 'कस्य सुकृतस्य वशतः प्रभूतवैभवभाजनमभवम्' इत्यनुध्याय प्रयुक्तावधिज्ञानेन यक्षराजेन तस्मिन्नेव लतागृहे जगत्पतेः पुरः स्वं शरीरं निरीक्ष्य श्रीयुगादिजिनप्रतिमामभ्यर्च्य प्रोचे। 'यदहं सर्वपुरुषार्थबहिष्कृतो ऽपि सर्वत्र लोके हस्यमानो ऽप्येवंविधैश्वर्यभाजनं यक्षराजः समभवं स केवलं तव प्रसाद एव। अतो युक्ता मम शीर्षे जिनेश्वरस्थापना। एकं तावदयं सुरासुरनरेश्वराणामप्यभ्यर्च्यः, द्वितीयं यदुपकारकारि मे, तृतीयं यत्सिद्धिसुखनिदानं च' इति परिवारपुरस्सरमुक्त्वा तेन यक्षेण तत्र वने स्वस्य मूर्तिं मद्दृशीं मुक्तामयीं निर्माय तस्या मुकुटोपरि श्रीमदादिनाथस्य प्रतिमा विदधे। तदाप्रभृति तत्र यक्षलोकेन रत्नशेखर इत्यभिधानमवगणय्य तस्य जिनशेखर इत्याख्या पप्रथे। तेनाहं चेति भणिता। 'यत्कनकप्रभे, त्वया प्रतिदिनं भगवान् दिव्यमणीचकैरभ्यर्चनीयः। मया पुनरष्टम्यां चतुर्दश्यां च परिवारेण समं सपर्यानिमित्त भगवतः समागन्तव्यम्।' इत्युदित्वा यक्षः स्वस्थानमगात्। ततो भद्र, यत्त्वया पृष्टं क एष यक्षः, किं चामुष्य मुकुटे जिनप्रतिमा, त्वमपि कासि, सैष यक्षराजः सेयं जिनप्रतिमा तस्य चाहं कर्मकरी। इह प्रतिदिनं मया समागन्तव्यमेव।' इति भणिते भणितं कुमारेण। 'अहो, महदाश्चर्यं, महाप्रभावो भगवान्, भक्तिभरनिभृतो यक्षराजः, विनीता भवती, रम्यः प्रदेशः, सर्वथा पर्याप्तं मम दृशां श्रुतीनां च फलम्।' ततस्तया भूयो ऽपि जगदे। 'भो भद्र, सफलं देवदर्शनम्, अतः किमपि प्रार्थय, यथा तव हृदयेप्सितं ददामि' इति। कुमारेणोक्तम्। 'न किमपि मम प्रार्थनीयमस्ति।' तया जगदे। 'कस्यापि किमपीप्सितं स्यात्ततो याचस्व किमपि।' कुमारेण जल्पितम्। 'भद्रे, एष भगवान् जिनभक्तिकरो यक्षराजो भवती चेति सर्वमप्येतदवलोकितं यतः परमपि किं प्रार्थनीयम्' इत्युदित्वा कुमारः समुत्तस्थौ। ततस्तयोक्तम्। 'भो भद्र, भवता दूरे गन्तव्यं यदरण्यमार्गो विषमो ऽनेकप्रत्यूहव्यूहनिदानम्' इति भणित्वा तया स्वकपादुत्तार्य सर्ववीर्यनिलयमौषधीवलयमेकमर्पयामासे। कुमारस्तदङ्गीकृत्यापाचीं प्रति चचाल।

§ ४० ) ततः क्रमेण कुमारेण प्रचण्डपवनहतकल्लोलमालाप्रेर्यमाणतीरपक्षिगणा करिकराघातसमुच्छलत्कल्लोला कुपितमत्तवनमहिषशृङ्गोत्क्षिप्तजलच्छटासिच्यमानतीरतरुनिकरा मीनपृष्ठोल्लसदतुच्छफेनपटलालंकृता प्रमत्तदुर्दान्तमत्तमातङ्गमण्डलीगण्डस्थलगलितमदजलबिन्दुसंदोहसुरभितजला नर्मदा समुत्तीर्णा। तत्तीरे कुमारः परिभ्रमन् तमालतरुराजीविराजितं प्राङ्कणकुसुमितकेसरशिखरिणं प्रत्यासन्नविकसत्पुष्पजातिमकरन्दमधु [ लुब्ध ] मुग्धमधुपध्वनिमनोहरमुटजं प्रविश्य रुद्राक्षमालावलयं

3) B कस्मिन्न सरसि 5) B adds तत्र before तीर्थकृत 6) B om. न before जाने 8) मया तावदुस्सह 9) B परप्रेष्येण (P प्रेक्षेण) भाव्यं 10) C दारिद्र्य. 14) C °महनिकाया 16) B om. तेन 18) B om. श्री, P B यदसि for यदह. 24) B परिवारेण सम 26) P (?) चामुष्य 31) P किमीप्सितं, B यदतो for स्यादतो, B om किमपि 33) The passage तत्तीरे कुमार etc... यतीव पयोराशु is adopted from B in which too it is written in a different style

